यद्यपयः शुभावहो विधिरिति कोषः, तथापि विधिसामान्येऽत्रास्य प्रयोगः। रुषा क्रोधेन इमाहिता-हितान् हस्तिनामहितेऽवस्थाविपर्यये आहितान् नियुक्तान् अधिकृतान् पुरुपुरुषान् प्रबलपुरुषकान् अन्तशात् आदिष्टवान्। अत्र नलोदयादर्वाग्भवयमककाव्येष्विव विश्रान्तिकरो यमकयोगः।

३। मत्तोरणरणभुवि मदपुरवहिर्द्वाररूपे रणाङ्गने मत्त उच्छृङ्खल उच्चैः शैलादुद्गतः पार्वत्य उच्चैरुन्नतायतनः सदम्भः मदेनोत्कटतया क्षीबः शौण्डः विजिगीषाप्रवण इति यावत् शौण्डः निपुणः विपक्षदलने प्रथितप्रभावः। श्रेयस्कर कुवलयापीडो मम हितविधायी कुवलयापीड़नामा हस्ती भवद्भिः युस्माभिः स्वैर्भवद्भिः निःसङ्कोचं स्वच्छन्दतया व्यवहरद्भिः दानादानाकुलदलदलि श्रीमदम्भः दानस्य मदस्रुतेः आदानात् स्वीकारात् आकुलं विपर्यस्तभावेन दलतां कम्पयतामलीनां दानसौरभेनाकृष्टानां भवाणां श्रिया यत् शोभनमम्भो वारि यस्य तत् यथा स्यात् तथा व्यवहर-न्नित्यर्थे योजना। शौण्डभ्रमरमणतो शुण्डस्यायमिति शौण्डः तादृशो भ्रमः भ्रामणं तदुत्थं रमणं क्रीड़नं तस्मात् व्यस्तविश्वस्तविश्वश्रेयः व्यस्तं सर्वथोपप्लुतं विश्वस्तस्य, तस्मिन् विश्रम्भोदयात् समाहितनिर्भरस्य विश्वस्य जगतः श्रेयः मङ्गलं येन तद्यथा स्यात् तथा। क्रियतामिति प्रविश पिण्डी-मित्याद्यालङ्कारिकोदाहृतिवदाक्षेपेणाध्याहारः।

६। कंसस्य स्वीयान्नियुक्तान् प्रति प्रचुरतिरस्कारोत्प्रासभाषणम्। हि हेतौ। भवन्तः समानभोगाः मानेन प्रचुरतरसम्मानेन सहितो भोगो भृतिर्येषां तादृशा मन्दा अलसा मूढ़ाश्च। तथा च अहिसमानभोगाः सर्पसदृशफणामण्डिताः काययुक्ताश्च लक्षणया किमपि अप्रियवाक्यं न सहन्ते अपि तु विरुद्धाचरणं कर्तुमभिसन्धिं कुर्वन्ति। परं समस्ताः सर्वे यूयं वस्तुलाभं यथायोग्यं प्राप्यं न गमिताः अपि तु काक्वा गमिता एव। नोचितां शिक्षामधिगतवन्तः आयत्यां तु भवतां यथोचितशिक्षा भविष्यतीति तर्जनम् इति वाकूतम्, समस्ताः पृथिव्या मनुष्याणां क्रियोप-योगे प्रवृत्ताः यावतोयाः पदार्थाः वो युष्माकं तु लाभं साध्श्याभासं न गमिताः नासादिताः स्मः।

७। साहसं शौर्यं वीरोचितमर्यादाञ्च गौड़ीयभाषया तथाऽभिहितं न तु दमं सम्प्रदायसिद्धं दुष्करकर्मे-त्यादि विहाय त्यक्त्वा पलायमानेन प्रस्थातुकामेन अपिहितेन आच्छादितेन मायामाश्रयता पुरन्दरेण देवराजेनेन्द्रेण विहायसा आकाशपथेन पलायमानेन तृणेनेवाचरता उन्मानेन 'पलमुन्मानमासयो'-रिति रुद्रः। अहनम् अहन् इति अनद्यतने लङ्। कथम्? यतः पुरन्दरेणापि पुरदारिणाऽपि शत्रुमुखेन हिते मङ्गलपरिणा(?)नवस्तुतः सद्य एव सम्मानितः। उन्मानानात् सम्मानलाभस्य योग्यत्वात् साहसं तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धाष्र्ट्ये इति हेमचन्द्रः। शौर्यार्थे प्रयोगः सुलभः।

८। अत्र केवलं जलधियोजितगोत्रावासिनः सागरवेष्टितपृथिवी न भवतां चरितं न जानन्ति। 'वा' इति विकल्पे। 'वा स्याद्विकल्पे च समुच्चये' इति विश्वः। विकल्पे वा जलधियो जड़धियो जड़धियः डलयोर्व्यत्ययानुमोदनात्। मन्दबद्धयः जितगोत्रावासिनः गोत्रा गोसंहतिः

तया सह वसन्ति ये ते गोत्रावासिनः गवां प्रतिवेशिनस्तत्सदृशाः जिता बुद्धप्रभावे नातिशयिता गोत्रावासिनः यैस्ततोऽल्पबुद्धयः अत्रभवतां महत्तराणां विपरीतलक्षणया निकृष्टतरां चरितं विदुः 'वा' इत्यवधारणे। गोत्रा कुः पृथिवी पृथ्वीत्यमरेण भूपयपि तथा उदणां संहतिरौक्षकम्। गव्या गोत्रा गवामिति चामरः।

१६। नवराजकला नवीनेन्दुकला। तद्वन्तं अग्र्यसुन्दरीवदनं अपरूपरूपसीमुखम्, तत्रस्था य इन्दुद्यु-तिगुमां (?) विस्मयौपितः चन्द्रकान्तिचमत्काराभे मावने स नवराजशशिप्रभासुरः अथच विशिष्टपर्वेण तत्र कृतावासः। उदीयमानाः राजचन्द्राः राजसूर्यश्च तद्वत् प्रभासुरः प्रकृष्ट-दीप्तिशाली 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति पूर्वावयवे उपमानानि सामान्यवचनै-रित्युत्तरावयवे च समासः। तथाविधो मदनः योषितः तस्य कंसस्य विलासिनीः पीड़यतिस्म। कदर्थितवान्। अन्यत्र च चन्द्रस्य विकारोद्दीपकत्वात् सूर्यस्य च स्वतएव तापकत्वादेवं करोति। विरहिसार्थस्य तु मदनं प्रति आक्षेपो इमावेव विषयीकुरुतः।

१७। कामतोऽपि सुन्दरतराकृतिः वस्तुतस्तु मिथ्यारूतत्वाभावात् गरिम्ना मोहजाज्ञानादमनोज्ञतरः युस्माकं पतिः नो विलासिनीनां परकीयानां मध्ये कं जनम् अति अतिशयेन दर्पतश्चुतं रूपं दर्पात् पराभूतं करोति स्म स्मेत्यतीतक्रियासूचनम्। इति भावात् एव धारणया मदन एवं सममदाः कन्दर्पसदृशाभिमानवतीः प्रमदाः दुनोति पीड़यति विरहज्वालया करोति स्म व्यथातुराः। कृपामयीसहायेन कृपामयीप्रसादतः। दुरूहकूटबन्धेऽत्र दुरूहसङ्गतिः कृता॥

# I षोडशदलपद्मबन्धः
## (ह. च. ८।६५, ६६)




B.

श्लोकः- ८।६५

सं सा र सा र सा भा सा
प्र सा द सा र सा ध्व सा।
र सा भ्या सा दि सा ध्वा सा
या सा या सा र सा ल सा॥

एवं ८।६६ श्लोके। (म केन्द्रे)।

# II अष्टदलपद्मबन्धः
## (ह. च. ८|६७,६८)




B.

श्लोकः- ८|६८

स व्ये नि व्ये स द्य मो दा
स ने ज्ञा ने स ते हि ते ।
स दा मो दा स ने स्या ने
स ह वे ह स मे र मे ॥

एवं ८|६७ (वि केन्द्रे)।

# III अष्टदलपद्मबन्धान्तरम्

## (ह. च. ८।६९, ७०)




श्लोकः- ८।६९ एवं ८।७० (का केन्द्रे)

के श वे ह त्व या ना के

के ना या मि ल मा लि के ।

के लि मा त च्च ते भी के

के भी ते वि नि वे श के ॥

# IV चक्रबन्धः

## ( ह. च. ८।८५ )

७८ पृः मुद्रितमुत्तरार्धं न सम्यक्। गलितांशो ज्ञातेऽन्यथैव स्यात्।




श्लोकः- ८।८५

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| उत्तरार्धं गलितम् | ज | य | कृ | षा | ज | ग | ह्वी | ज |
| | ज | ल | जा | क्ष | ज | ना | र्द | न। |
| ३य ४र्थ ८म १२श १६श | I | II | III | | V | VI | VII | |
| | - | - | - | क्ष | - | - | - | ज |
| अक्षराणि पूर्वार्ध इव | IX | X | XI | | XIII | XIV | XV | |
| | - | - | - | ष | - | - | - | न॥ |

I, II, III, V, VI, VII, IX, X, XI, XIII, XIV, XV.

अक्षराणि गलितानि।

# V चक्राबन्धः
# (ह. च. ८।८६)




(द्विः)

B.

श्लोकः- ८।८६

म धु श त्रो म धु क रा
म त्ता म धु म दा दि मे ।
गा य न्तो त्रो त्स वे धी रा
म नः सा धु ह र न्ति मे ॥

# VI खड्गबन्धः
## ( ह. च. ८|८७-८८ )




श्लोकौ :-

का लि न्दी ज ल क ल्लो ल के लि का न्ते न वा यु ना।
मा ल ती म ल्लि का मो द हा रि णा सं वि मो हि का॥ ८७
का म नी य क म प्य स्य का मि नी मा न स न्दि का।
का म स्या न न्द मा ध त्ते कृ ष्णा न न्द व न स्य लौ॥ ८८

# VII मुरजबन्धः
## (ह. च. ८|८६)




B.

श्लोकः- (८|८६) -

स र सा सु र सा र स्य
त र सा मो दि सा र सा
स र सा दि न सा तु ल्या
सा र सा सु र सा तु ला

# VIII षडरचक्रबन्धः (कविकाव्यनामाङ्कचक्रम्)

## ह. च. ८|१०५



श्लोकः- (८|१०५) -

त त्र्या प्री य त सा च ल तु ल गु णा ज स्रं व ने च क्रि णा-
म भ्या ह न्ति च कौ तु का नि ल मु खो क म्रा स्य लो रि ङ्गि ते।
स दा रि प्र क रै र्भु वो म ल त या वि स्ता रि सा तं हि ते
ते न त्र्या त त या म हा र स भ रे णा भू द्र ते स म्भु ते॥